विशेष **आध्यात्मिकमिति**। "अहं मनुरभवम्" "अहं रुद्रेभिः" इत्यादि। 'वेदान्त' इति यदभिहितं तदपि कर्मज्ञानसमुच्चयं ब्रह्मत्वाय दर्शयति ॥ ८३ ॥

(२) **सर्वज्ञनारायणः**। ध्यानाद्विरतस्य यत्कार्यं तदाह **अधियज्ञमिति**। **अधियज्ञं** यज्ञमधिकृत्य प्रदत्तं भागं। **ब्रह्म** वेदं। **आधिदैविकं**। देवताश्रुतिमधिकृत्य प्रवृत्तं मन्त्रभागं। **आध्यात्मिकं** आत्मविषयमुपनिषद्भागं। **वेदान्ताभिहितं** वेदान्तेषु जप्यत्वेनोक्तमोंकाररूपं ब्रह्म इदं वेदान्ताभिहितम् ॥ ८३ ॥

(३) **कुल्लूकः**। पूर्वं ब्रह्मध्यानस्वरूपमुपासनमुक्तम्, इदानीं तदङ्गतया वेदजपं विधत्ते। तथा च श्रुतिः (बृह.४।४।२२) 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति विद्याङ्गतया वेदजपमुपदिशति **अधियज्ञमिति**। यज्ञमधिकृत्य प्रवृत्तं ब्रह्म वेदं तथा देवतामधिकृत्य प्रवृत्तं तथा जीवमधिकृत्य तथा वेदान्तेषूक्तं 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिब्रह्मप्रतिपादकं सर्वदा जपेत् ॥ ८३ ॥

(४) **राघवानन्दः**। अत एवाह **अधीति**। **अधियज्ञं** यज्ञमधिकृत्य प्रवृत्तं कर्मकाण्डं 'इषे त्वोर्जे त्वे'त्यादि। **ब्रह्म** वेदं **जपेत् आधिदैविकं** देवता ईश्वरादि तद्विषयकं सहस्रशीर्षादिसंकर्षणकाण्डं। **आध्यात्मिकं** 'तत्त्वमसि' (छां. ६।८।७) 'सत्यं ज्ञानमनन्तं ब्रह्मे'(तै. २।१।१)त्यादि **वेदान्ताभिहितं** वेदान्तपदवाच्यं जपेदित्यनुषज्यते ॥ ८३ ॥

(५) **नन्दनः**। यत एव तस्माद्वेदस्य यःकश्चित्प्रदेशः संन्यासिनोऽध्यात्मज्ञानसहितो जप्तव्य इत्याह **अधीति**। **अधियज्ञं** यज्ञमधिकृत्य प्रवृत्तं वेदं ब्राह्मणभागमा**धिदैविकं** ब्रह्मादिदेवानधिकृत्य प्रवृत्तं मन्त्रभागमा**ध्यात्मिकं** ब्रह्मोपनिषद्भागं **वेदान्ताभिहितं** ब्रह्मप्रणवं जपेत्। अध्यात्मज्ञानसहितमिति भावः। सच्छब्द आध्यात्मिकप्रणवजपयोरादरातिशयसूचकः ॥ ८३ ॥

(६) **रामचन्द्रः**। **अधियज्ञं** यज्ञमधिकृत्य ब्रह्म जपेत्, यज्ञप्रतिपादकवेदभागं च पुनः **आधिदैविकं** देवतामधिकृत्य तत्स्वरूपप्रतिपादकं मन्त्रभागं च पुनः **आध्यात्मिकं** आत्मस्वरूपप्रतिपादकं एतत्त्रयं जपेत्। च पुनः यद्वेदान्ताभिहितं वेदान्तेन कथितमोंकारं सततं जपेत् ॥ ८३ ॥

(७) **मणिरामः**। ज्ञानांगतया वेदजपमुपदिशति **अधियज्ञमिति**। यज्ञं अधिकृत्य प्रवृत्तं **अधियज्ञम्**। देवतां अधिकृत्य प्रवृत्तं **आधिदैविकं**। जीवं अधिकृत्य प्रवृत्तं आत्मकं एतादृशं ब्रह्म वेदं जपेत्। तथा वेदांताभिहितं च यत् 'सत्यं ज्ञानमनंतं ब्रह्मे'त्यादि ब्रह्मप्रतिपादकं च सर्वदा जपेत् ॥ ८३ ॥

(८) **गोविन्दराजः**। **अधियज्ञमिति**। यज्ञमधिकृत्य प्रवृत्तं ब्राह्मणाख्यं वेदं देवतामधिकृत्य प्रवृत्तं देवताप्रकाशनपरमग्निर्मूर्धेत्यादिकं आत्मानं चाधिकृत्य प्रवृत्तं पुरुषसूक्तादिकं उपनिषत्सु चोक्तं सर्वकालं जपेत् ॥ ८३ ॥

(९) **भारुचिः**। अध्यात्मनिषत्त्वोपदिशत्वोपदेशे वा सति तन्निवृत्त्याशङ्कयाऽनुवृत्त्यर्थमिदमुच्यते यज्ञे तदित्यधियज्ञं कर्मोपदेशः। ब्राह्मणं विध्यर्थं वादनामधेयाख्यं आधिदैविकमन्त्राः। आध्यात्मिकं च ब्रह्ममन्त्रैकदेशः। प्रकरणात् पुरुषसूक्तादिषु क्रिया वा। वेदान्ताभिहित-

मुपनिषदः। सामर्थ्यात् सोऽयं मन्त्र ब्राह्मणाप्योसामान्या (द्वया) नशब्देन च यत्किञ्चिदत्र प्रव्रज्याप्रकरणे शास्त्रे वा परमार्थदर्शनमुक्तं तत्सर्वमभिधीयते। तस्मिन् ध्याने परमार्थदर्शने यद्भयं कर्म तद्वयानिकमेवं च सति परमार्थदर्शनस्तुतिरियम्। ज्ञानकर्मस-मुच्चयस्तुतिर्वा। तथा चोक्तम्–

"सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते।" इति। अस्या वा हेतुरयं विज्ञेयः। कस्मात् पुनरेतदेवं भवति; यस्मात्—

'न ह्यनध्यात्मवित्कश्चित् क्रियाफलमुपाश्नुते।' आत्मनि तदित्यध्यात्मं बुद्ध्यादि। तद्वेत्तीत्यध्यात्मवित् च। पुनर्यथाविषयं व्याकरीयं (?) अस्य निदर्शनार्थमिदं रहस्यब्राह्मणं भवति। "यो वा एतदक्षरं गार्ग्यवि(दि)त्वाऽस्मिल्लोके जुहोति यजते तप"स्त (स्याप्य)-वेदः। श्लोकसमाप्त्यर्थमेवं चतुर्धोक्तस्तथा च सति यथैव प्रव्रजितस्याध्यात्मानुष्ठानमुत्कर्षाय एवं वेदाभ्यासोऽपीत्येतदपि सामर्थ्यादवगम्यते। तथा च स्मृतिः – 'शब्दब्रह्मणि निष्णातः'। तस्याध्ययनविज्ञानतदर्थानुष्ठानेन परं ब्रह्माधिगच्छति। अपरस्त्वाह-समर्थस्येदमध्यात्मानु-ष्ठाने श्रौतस्य वा तत्रारतेर्वा।। ८३।।

**इदं शरणमज्ञानामिदमेव विजानताम्।।**
**इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम्।।८४।।**

**(१) मेधातिथिः। इदमिति** वेदाख्यं ब्रह्माचष्टे। सोऽपि ब्रह्मैव। तथा चोक्तं (मैत्रा. ६।२२)–"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधि-गच्छति" इति। अध्ययनं विज्ञानं, तदर्थानुष्ठानेन 'निष्णातता'। पूर्वस्य विधेरयमर्थवादः।

**अज्ञानाम**तदर्थविदां जपादिष्वधिकारेण। तथा भगवता व्यासेन सिद्धिर्जापकानां दर्शिता। अथवा 'अज्ञा' अनात्मज्ञाः शास्त्रानवगतात्मतत्त्वा अपि तदुपासनापरा अलब्ध-चित्तस्थैर्याः। तेषां वेदः 'शरणम्'। जपेन कर्मानुष्ठानेन तावत्या च विद्यया। नरकेषु कीटपतङ्गादियोनिषु चानुपपत्तेः।

**इदमेव विजानताम्।** कथं पुनर्विदुषां शरणमत आह **इदमन्विच्छतां स्वर्गम्।** एतावदेते कर्मकाण्डज्ञा आत्मन्यलब्धमनःप्रतिष्ठा वा, तेषां कर्मानुष्ठानात्स्वर्गादिफलं लभ्यते। इतरे त्यक्तसङ्गाः प्रक्षीणरागादिदोषा ज्ञानात्मतत्त्वोपासनापरास्तेषामानन्त्यम-पुनरावृत्तिरिति। सर्वेषां वेद एव शरणं, नान्यः पन्था अस्तीत्यर्थः।। ८४।।

**(२) सर्वज्ञनारायणः। ब्रह्म शरणं** रक्षकं। **अज्ञानां** ध्यानोचितज्ञानशून्यानां। **विजानतां** तादृग्ज्ञानवतां। **आनन्त्यं** मोक्षम्।। ८४।।

**(३) कुल्लूकः। इदं** वेदाख्यं ब्रह्म तदर्थानभिज्ञानामपि **शरणं** गतिः पाठमात्रेणापि पापक्षयहेतुत्वात्। सुतरां तज्जानतां तदर्थाभिज्ञानां **स्वर्ग**मपवर्गं चेच्छतामिदमेव **शरणं** तदुपायोपदेशकत्वेन तत्प्राप्तिहेतुत्वात्।। ८४।।

**(४) राघवानन्दः।** सर्वसाध्ये वेदस्यैव साधनत्वमाह **इदमिति। इदं** वेदरूपं **अज्ञानां** वेदार्थानभिज्ञानां पाठमात्रेण **ऋचोऽधीते** इत्यादिफलहेतुत्वावगमात्। **विजानतां**

कर्म कर्तव्यतया विदुषां तदुपायभूतम्। इदमेव स्वर्गमिच्छतां यागाद्यनुष्ठायिनामपीदं साधनं यागादिबोधहेतुत्वात्। **आनन्त्यं मोक्षमिच्छतां** मुमुक्षूणां तदुपायतत्त्वज्ञानजनकत्वादिति। तदुक्तमत्रैव (१।९७)। 'ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिन' इति। उपवीतं वा तत्प्रधानत्वादिति न्यायाद्वा सर्वसाधनस्तुत्या आत्मध्यानं विधत्ते इदमिति निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामित्यत्रोपवीतमेव निवीतादिपदाभ्यां श्रूयते उपव्ययते देवलक्ष्ममेव तत्कुरुत इत्युपवीतस्य प्राधान्यवत इति न्यायार्थः। अथवाऽज्ञानामित्यादिपदचतुष्टयेन ब्रह्मचर्यादिचतुर्णां ग्रहणम्॥ ८४॥

(५) **नन्दनः**। आध्यात्मिकज्ञानमेव प्रकारान्तरेण स्तौति **इदमिति**। **इदमध्यात्मज्ञानम्**॥ ८४॥

(६) **रामचन्द्रः**। **इदमाध्यात्मिकादित्रयमज्ञानां पुंसां शरणम्**॥ ८४॥

(७) **मणिरामः**। **शरणं** गीतः **आनंत्यं** मोक्षं॥ ८४॥

(८) **गोविन्दराजः**। इदमिति शास्त्रार्थानभिज्ञानां ब्रह्मैव पेदारवांशरणगतिः इत्युत्कर्षापकर्षणप्राप्तपरिहारहेतुत्वात्। एवमिदमेव ज्ञानवतां स्वर्गापवर्गमिच्छतामिति॥८४॥

(९) **भारुचिः**। अस्येदानीं पूर्वविधेर्वा यथायोगं स्तुत्यर्थमिदमारभ्यते–आनन्तर्याद् ब्रह्मणो जपकर्मेदमुच्यते यथासंख्येन। अथवा परिव्रज्याप्रशंसेयम्॥ ८४॥

**अनेन क्रमयोगेन परिव्रजति यो द्विजः॥**
**स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति॥८५॥**

(१) **मेधातिथिः**। **क्रमेण योगो**ऽनुष्ठानम्। आत्मज्ञानकर्मणोः समुच्चये यः क्रम उक्तः, तेन ऋणापाकरणं कृत्वेत्यर्थः। **विधूय पाप्मानमश्व** इव रोमरजांसि, तथैवात्मविद्यया। यथोक्तं (बृह. ४।१४।३) "यथा पुष्करपलाश आपो न श्लिष्यन्त्येवमेतद्विदि पापं कर्म न श्लिष्यतीति"। **परं ब्रह्माधिगच्छति** तद्रूपः संपद्यते निवृत्तभेदग्रह इति विद्याश्रमफलविधिः॥८५॥

(२) **सर्वज्ञनारायणः**। क्रमयोगेन ऋणत्रयापाकरणपूर्वकम्॥ ८५॥

(३) **कुल्लूकः**। अनेन यथाक्रमोक्तानुष्ठानेन यः प्रव्रज्याश्रममाश्रयति स इह लोके पापं विसृज्य परं ब्रह्म प्राप्नोति। ब्रह्मसाक्षात्कारेणोपाधिशरीरनाशाद्ब्रह्मण्यैक्यं गच्छति॥ ८५॥

(४) **राघवानन्दः**। अत आह **अनेनेति**। 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजे'दिति (जाबाल. ४)॥ ८५॥

(५) **नन्दनः**। एवं प्रतिपादितस्य यत्याश्रमस्य फलमाह **अनेनेति**। अनेनोक्तेन यत्याश्रमधर्मकर्मानुष्ठानेन चातुराश्रम्यक्रमयोगेनेति॥ ८५॥

(६) **रामचन्द्रः**। इह शरीरं विधूय परं ब्रह्माधिगच्छति॥ ८५॥

(८) **गोविन्दराजः। अनेनेति**। उक्तेनाश्रमसंबन्धेन यो द्विजः प्रव्रज्यामाश्रयति इहैव लोके कल्मषं निर्दह्य क्षयात्परं ब्रह्मरूपं संपद्यते ॥ ८५ ॥

(९) **भारुचिः**। तदुपसंहारदर्शनात् चातुराश्रमः सावान शास्त्रस्यानुपसंहारात्तस्य तथा च शास्त्रोपसंहारशास्त्रस्तुतिर्वक्ष्यते–अयं श्लोकः प्रव्रज्याधिकारस्तुत्यर्थः। आश्रयसमुच्चयस्तुत्यर्थो वा ॥ ८५ ॥

**एष धर्मोऽनुशिष्टो वो यतीनां नियतात्मनाम् ॥**
**वेदसंन्यासिकानां तु कर्मयोगं निबोधत ॥८६॥**

(१) **मेधातिथिः**। वेदस्य संन्यासः त्यागः। स एषामस्तीति **वेदसंन्यासिकाः**। वेदशब्देन यागहोमादेः कर्मणस्त्याग उच्यते, न पुनर्जपत्यागः। आत्मचिन्तनं तु विहितमेव। केवलं धनसाध्याः शरीरक्लेशसाध्याश्च तीर्थयात्रादय उपवासादयश्च निषिध्यन्ते। यानि त्वात्मैकसाधनसाध्यानि सन्ध्याजपादिकर्माणि तेषामनिषेधः। तदेतत्स्वस्थान एव दर्शयिष्यामः। आद्येनार्धेन प्रव्रज्याश्रमोपसंहारः। उत्तरेण वेदसंन्यासिकस्य कर्मोपदेशप्रतिज्ञा ॥ ८६ ॥

(२) **सर्वज्ञनारायणः। यतीनां** यमवतां। **नियतात्मनां** नियमवतां। पक्वकषायाणां परिव्राजकानामिति यावत्। **वेदसंन्यासिकानां** अपक्वतया कषायस्य ध्यानप्रवृत्तावशक्तानां गृहस्थानां मोक्षहेतौ वेदाभ्यास एवात्मानां संन्यस्तानंम्। **कर्मयोगं** कर्तव्यमुद्यमां। ॥ ८६ ॥

(३) **कुल्लूकः**। एषः **यतीनां** यतात्मनां चतुर्णामेव कुटीचरबहूदकहंसपरमहंसानां साधारणो धर्मो वो युष्माकमुक्तः। इदानीं यतिविशेषाणां कुटीचराख्यानां वेदविहितादिकर्मयोगिनामसाधारणं वक्ष्यमाणं पुत्रैश्वर्ये सुखं वसेदिति कर्मसंबन्धं शृणुत। भारते चतुर्धा भिक्षव उक्ताः। 'चतुर्धा भिक्षवस्तु स्युः कुटीचरबहूदकौ। हंसः परमहंसश्च यो यः पश्चात्स उत्तम' इति। कुटीचरस्यायं पुत्रभिक्षाचरणरूपासाधारणकर्मोपदेशः। **गोविन्दराजस्तु** गृहस्थविशेषमेव वेदोदिताग्निहोत्रादिकर्मत्यागिनं ज्ञानमात्रेण संपादितवैदिककर्माणं वेदसंन्यासिकमाह। तन्न; यतो गृहस्थस्याहिताग्नेरन्त्येष्टौ विनियोगश्चतुर्थाश्रमाश्रयणे चात्मनि समारोपः शास्त्रेणोच्यते तदुभयाभावे सत्येवमेवाग्नीनां त्यागः स्यात्। 'गोविन्दराजो गृहस्थं वेदसंन्यासिकं ब्रुवन्। एवमेवाहिताग्नीनां त्यागमर्थादुपेतवान्। वेदसंन्यासिकं मेधातिथिः प्राह निराश्रमम्। तन्मते चातुराश्रम्यनियमोक्तिः कथं मनोः' ॥ ८६ ॥

(४) **राघवानन्दः**। यतिधर्ममुपसंहरति **एष** इति। **यतीनां** त्रयाणां बहूदकहंसपरमहंसभेदेन। वेदसंन्यासिकानां कुटीचकानां वेदोक्ताग्निहोत्रादिकर्मत्यागिनां न तु तज्जपत्यागिनामिति **मेधातिथिः** ॥ ८६ ॥

(५) **नन्दनः**। एवं प्रतिपादितस्य संन्यास उपपद्यते नान्यस्येत्याह **एष** इति। एतच्छब्देनात्र फलाभिसन्धियुक्तं कर्म विवक्षितम्। तस्य त्यागो वेदसंन्यासस्तद्वान्वेदसं-

न्यासिकः। नहि वेदस्य शब्दराशिरूपस्य संन्यास उपपद्यते। वेदसंन्यासिकानां ब्रह्मत्वेन 'नियतो वेदमभ्यस्य'न्निति वक्ष्यमाणत्वात्। **कर्मयोगं** वक्ष्यमाणं दशलक्षणं धर्मात्मकम् ॥ ८६ ॥

(६) **रामचन्द्रः**। हे द्विजाः! **नियतात्मनां** नियमवतां पक्वकषायाणां यतीनां एष धर्म **अनुशिष्टः** कथितः। **वेदसंन्यासिकानां** अपक्वकषायतया मोक्षहेतोर्वेदाभ्यासरतात्मनां कर्मयोगं निबोधत ॥ ८६ ॥

(७) **मणिरामः**। **यतीनां** यतात्मनां चतुर्णां कुटीचर १ बहूदक २ हंस ३ परमहंसानां ४ एष धर्मः साधारणो धर्मः वः **अनुशिष्टः** उक्तः। इदानीं **वेदसंन्यासिनां** वेदविहितकर्मत्यागिनां कुटीचकाख्यानां **कर्मयोगं** वक्ष्यमाणं 'पुत्रैश्वर्ये सुखं वसेदि'ति कर्मसंबंधं **निबोधत** शृणुत ॥ ८६ ॥

(८) **गोविन्दराजः। एष इति।** एषोऽनन्तरोक्तो यतात्मनां संबंधी धर्मो युष्माकमुक्तः; इदानीं वेदोदिताग्निहोत्रादिकर्मपरित्यागिनामेतानैके महायज्ञानित्यादिप्रकारेण ज्ञानबलादग्निहोत्रादिकर्मसंपादिनां कर्मबन्धं शृणुत। न चाग्निहोत्रादीनां श्रुतिचोदितानां स्मृत्या कथं त्याग इति वाच्यं आत्मज्ञाननिष्ठं प्रति यावद्वै पुरुषो भाषत इत्यादि चतुर्थाध्यायदर्शितश्रुतिप्रकारेणास्याप्यनुष्ठानस्य श्रौतत्वाद्यद्यपि गृहस्थविशेष एव वेदसंन्यासिकस्तथापि प्रव्रज्यावैकल्पिकत्वं संन्यासिकत्वस्य ज्ञापयितुं प्रव्रजितधर्मसमनन्तरं अभिधानमेवं च गृहस्थवेदत्वेन वेदसंन्यासिकस्य चातुराश्रम्यान्तर्भावादाश्रमाणां चतुस्त्रिद्विसमुच्चयविकल्पबाधपक्षान् दर्शयितुं तावदिष्टमाह ॥ ८६ ॥

(९) **भारुचिः**। पूर्वोक्तयोः प्रकरणयोरुपसंहारार्थोपन्यासार्थः श्लोकः। वेदस्य संन्यासो वेदसंन्यासः। तत्र भवो वेदसंन्यासिकः। न हि वेदस्य संन्यासोऽस्ति। शास्त्रविरोधाद्यतः सामर्थ्यादयमस्यार्थ उच्यते। वेदस्य हि ग्रन्थार्थाभ्यासनिमित्तस्तदर्थानुष्ठानाय च प्रतिग्रहाणां वृत्तिकर्मणां संन्यासो यस्य स वेदसंन्यासिको गृहस्थ एव कृतकरणीयोऽभिधीयते। सामर्थ्यात्तथा च तं वक्ष्यत्यनन्तरमेव कृतसम्प्रत्तिविधानो वा आसन्नमृत्यूपदर्शकेनारिष्टदर्शनेन। तथा च वाजसनेयकं रहस्यब्राह्मणमिदमर्थं भवति 'अथात्वः सम्प्रत्तिः। यदा प्रैषन्मन्यते पुत्रमाहे'त्येवमादिः स हि कृतकरणीयः तथा वासन्नशरीरो वा जरसा कृतसम्पत्तिविधानोऽपुत्रोपहृतवृत्तिरस्यामवस्थायां निरुत्सुकः परमासंय(म)वान् परमात्मध्यानैकालम्बनः सुखमासीत। न तु नित्यानामग्निहोत्रादीनां संन्यासोऽस्ति नित्यत्वादेव शास्त्रविरोधाच्च। न च वेदस्येत्युक्तम्। यतो यतोऽयमेव शास्त्रार्थ इति। विकल्पार्थश्चायम्। अस्येहोपदेशः पारिव्रज्येनाक्रमेऽपि कथं बस्तावत् समर्थो गृहात् प्रव्रज्यायां तस्य यथाशास्त्रं स भवति। असमर्थस्य पुनरुत्सृष्टाग्नेः शास्त्रादर्थाद्वियमवस्थोच्यते। प्रव्रज्या वैक(ल्पि)की। एवं च कृत्वा प्रव्रज्यानन्तरं तदुपदेशो युज्यत इति ॥ ८६ ॥

**ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।**
**एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥८७॥**

(१) **मेधातिथिः।** "ननु च संन्यासिककर्माणि वक्ष्यामीति प्रतिज्ञयाऽऽश्रमानुक्रमणमप्रकृतम्"। केचिदाहुर्न संन्यास आश्रमान्तरमत्रैवान्तर्भावोऽस्येति दर्शयितुम्। स च कस्मिन् गृहस्थेऽन्तर्भावितः। गृहे हि वासस्तस्य। अन्यैस्तु प्रव्रज्यायाम्, संगत्यागसामान्यात्। अतो नास्यान्तर्भावे प्रयोजनं, पुरुषधर्मैर्यतिधर्मैश्च न यागादावधिकरिष्यति। वैशेषिकैश्च स्वशब्दविधानात्। अनाश्रमित्वात्। "संवत्सरमनाश्रमीति, प्रायश्चित्तप्रसङ्गादिति चेत्" वचनेनैवास्या व्यवस्थाया विदितत्वात्कुतः प्रायश्चित्तप्राप्तिः ?

तस्माद्‌गृहस्थादितुल्यतया संन्यासिकं प्रशंसितुमाश्रमान्तरसंकीर्तनम्। तच्च समुच्चयं द्रढयितुम्। गृहस्थानामवस्थितिरेषामित्यर्थः। **गृहस्थः प्रभवः** स्थितिहेतुरेषामिति विग्रहः।। ८७–८८।।

(२) **सर्वज्ञनारायणः।** तत्र गार्हस्थ्यमेव तावत् स्तौति **ब्रह्मचारीति**। एते **गृहस्थप्रभवाः**। गृहस्थस्यैवापत्योत्पादकत्वात् अनुत्पन्नानां चाश्रमायोगात्।। ८७।।

(३) **कुल्लूकः।** इदानीं वेदसंन्यासिकस्य प्रतिज्ञाते कर्मयोगेऽनन्तरं वक्तुमुचितेऽपि वेदसंन्यासिकः पंचमाश्रमी निराश्रमी वा चत्वार एवाश्रमा नियता इति दर्शयितुमुक्तानाश्रमाननुवदति **ब्रह्मचारीति**। ब्रह्मचर्यादयो य एते पृथगाश्रमा उक्ता एते चत्वार एव गृहस्थजन्या भवन्ति।। ८७।।

(४) **राघवानन्दः।** कुटीचकाख्यानां वेदसंन्यासिकत्वेन पञ्चमाश्रमत्वं प्राप्तमिति शङ्का स्यात्तदर्थमुक्तानाश्रमाननुवदति **ब्रह्मचारीति**। एषां नैष्ठिकोपकुर्वाणाः षट्कर्मत्रिकर्मवालखिल्यफेनपकुटीचकबहूदकाद्यवान्तरभेदेऽपि चत्वार एव इति। **गृहस्थप्रभवाः** गृहस्थमाश्रित्यैव प्रकर्षेण ते भवन्ति। गृहस्थस्यापि शिलोञ्छनादिवृत्तिर्गृहस्थमाश्रित्यैव भवति। यद्वा गृहस्थस्यैव सर्वे चत्वारः पुत्रास्तदन्येषां पुत्राभावादिति। तथा च **गौतम**सूत्रं 'एषा गृहस्यैका योनि'रिति।। ८७।।

(५) **नन्दनः।** न केवलं चतुर्थाश्रम एव वेदसंन्यासिकस्य परमगतिप्राप्त्युपायः किंतु यःकश्चिदप्याश्रम इति श्लोकद्वयेनाह **ब्रह्मेति**। ब्रह्मचारी ब्रह्मचर्यम्। भावप्रधाननिर्देशः। एवमुत्तरत्रापि। **गृहस्थप्रभवा** गार्हस्थ्यमूलाः। अनेन गार्हस्थ्यस्य श्रैष्ठ्यं सूचितम्।। ८७।।

(७) **मणिरामः। गृहस्थप्रभवाः** गृहस्थजन्याः।। ८७।।

(८) **गोविन्दराजः। ब्रह्मचारीति।** य एते ब्रह्मचर्यादय आद्याश्रमिणः पृथगुक्ता गृहस्थजन्याः। एवं च गृहस्थव्यतिरिक्ताश्रमिभिः शास्त्रव्यतिक्रमेण ज्ञातानां नास्ति हस्तचर्याद्याश्रमाधिकारः।। ८७।।

(९) **भारुचिः।** उक्त आश्रमाणां समुच्चयस्तेषां पुनरधुना बाधाविकल्पो वक्तव्याविति। (यतस्तत्प्र)सिद्धय इदमारभ्यते— एवं च न पाषण्डोत्पन्नाः सन्तः स्वकर्मणा सम्बध्यन्ते सर्वाश्रमाणां च गार्हस्थ्यस्य श्रैष्ठ्यं बाधापक्षमाश्रित्य यद्वक्ष्यति तत्स्तुत्यर्थमिदं वेदितव्यम्, विकल्पार्थं पुनरिदमेतेषाम्।। ८७।।

**सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः ।।**
**यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ।।८८।।**

(२) **सर्वज्ञनारायणः**। सर्वेऽपि **क्रमशो** वा व्युत्क्रमेण। **यथाशास्त्रं** नतु स्वेच्छया। आश्रमधर्मपरिग्रहेण यथोक्तकारिणं मोक्षानुगुणत्वेनोक्तानां क्रमान्नैष्ठिकधर्मवेदसंन्यासमहाप्रस्थाध्यानाभ्यासानां कर्तारं। परमां गतिं मोक्षं नयन्ति न तु यत्याश्रममात्रं। तथा च सर्वप्रभवत्वान्मोक्षहेतुत्वादगार्हस्थ्यं प्रशस्ततरमित्यर्थः ।। ८८ ।।

(३) **कुल्लूकः**। एते सर्वे चत्वारोऽप्याश्रमाः शास्त्रानतिक्रमेणानुष्ठिताः। अपिशब्दात् त्रयो द्वावेकोऽपि यथोक्तानुष्ठातारं विप्रं मोक्षलक्षणां गतिं प्रापयन्ति ।। ८८ ।।

(४) **राघवानन्दः**। **सर्वे** धर्मा ब्रह्मचर्यादयः **क्रमश** उक्तक्रमेण **निषेविता** अनुष्ठिताः। **यथोक्तकारिणं** यथाविध्याश्रमचतुष्टयानुष्ठातारं। **विप्रमिति** मनुवचनाद्विप्रदेहस्यैव संन्यासात्मज्ञानान्मुक्तिः। 'ब्राह्मणा विविदिषन्ति ब्राह्मणाः पुत्रैषणायाश्च स ब्राह्मणः केन स्यादि'ति ब्राह्मणश्रुतेः। 'गर्भस्थो वामदेवः प्रतिपेद' इति मन्त्रलिङ्गात् श्वेतकेतुभृग्वादिसंवादात्। काश्यादिमृतानामप्यन्येषां तात्कालिकविप्रदेहोऽनुमेय इति परमामिति विशेषणान्मोक्षाख्याम् ।। ८८ ।।

(५) **नन्दनः**। **यथोक्तकारिणं** न तु यथोक्तफलैषिणम् ।। ८८ ।।

(७) **मणिरामः**। **एते सर्वेऽपि** चत्वारोऽप्याश्रमाः। **परमां गतिं** मोक्षलक्षणां ।।८७-८८।।

(८) **गोविन्दराजः**। **सर्वेऽपीति**। सर्वेऽपि चत्वारोऽप्यपिशब्दात्त्रयो द्वावेक एव इत्येतदुक्तशास्त्रानतिक्रमेणानुष्ठिताः सन्तो यथोक्तानुष्ठातारं विप्रब्रह्मप्राप्तिलक्षणां गतिं प्रापयन्ति। समुच्चयविकल्पपक्षाणां ब्रह्मचर्यं परिसक्त इत्यादिश्रुतिमूलं दर्शितम्। बाधापक्षेऽपि जरामयं व एतत्सत्रं यदग्निहोमं जुहोति यद्दर्शपूर्णमासाभ्यां यजत इत्यादिश्रुतिमूलत्वं। एवं च समुच्चयविकल्पबाधापक्षाणां सर्वेषां श्रुतिमूलत्वाद्यथारुच्यन्यतमपक्षानुष्ठानं नैष्ठिकत्वस्यापि श्रुतिमूलत्वं दर्शितम्। एवं च यत्कैश्चिन्नैष्ठिकत्वादीनां स्मार्तत्वाद्गार्हस्थ्येन श्रौतेन बाधो गार्हस्थ्यमप्यनधिकृतं अन्धादिविषयता चेत्युक्तं—तदसत्; सर्वेषां प्रत्यक्षश्रुतिमूलत्वस्य दर्शितत्वात् ।। ८८ ।।

**सर्वेषामपि चैतेषां वेदश्रुतिविधानतः ।।**
**गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ।।८९।।**

(१) **मेधातिथिः**। इदमयुक्तं वर्तते। वेदशास्त्रश्रुत्या गार्हस्थ्यस्य विधानं प्रतिज्ञायते, इतरेषां च भर्तव्यत्वम्। गार्हस्थ्यस्य प्रत्यक्षश्रुतिविधानेनैवाश्रमान्तराणां सद्भावः। सन्निहिततपःस्मृतिभ्यो बलीयसी श्रुतिः। अथोच्येत—नैवायमभिसम्बन्धः क्रियते, वेदश्रुत्या विधानात् इति। अयमभिसंबन्धः। सत्यपि चैतस्मिन् विधाने गृहस्थस्य श्रैष्ठचं तद्भरणनिमित्तं 'स त्रीनेतान्' इत्यनेन प्रतिपाद्यते तत्र वक्तव्यं कथम्, आश्रमान्तराणां श्रुतत्वात् —श्रौतत्वे च स्पष्टेयं स्मृतिर्विरुध्यते "प्रत्यक्षविधानाद्गार्हस्थ्यस्ये'त्यादिना। न च सम्बन्धान्तरसंभवः।। अथोच्येत— 'गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्' इति जाबालश्रुतिमपेक्ष्य सर्वाण्येव श्रुतानीति।—

स्मृतिविरोधस्तावदपरिहृत एव। किं च नैषा श्रुतिर्विधात्री। न ह्येतत् श्रुतम्—एवं वने वा विहर्तव्यमिमानि वनस्थेनैव कर्माणि कर्तव्यानीमानि प्रव्रजितेनेति, यथाऽऽधानात्प्रभृत्याचरमेष्टि सर्वं गृहस्थकर्म प्रत्यक्षमुक्तन्नैवमाश्रमान्तराणाम्। केवलं नाममात्रं श्रूयते 'गृही भूत्वे'त्यादि। तस्मात्पूर्वापरविरुद्धं गार्हस्थ्यमूलमाश्रमाणामिवोपदिश्यते।"

अत्रोच्यते—सत्यमाधानात्प्रभृति गृहकर्माणि प्रत्यक्षश्रुतानि कृतदारपरिग्रहस्य। तत्र विवाहे प्रयुक्तिनिरूपणार्त्कि कर्म श्रुतिभिः प्रयुज्यते, अग्निहोत्रादिभिः स्वाहाधिकारः श्रुतेरर्थापत्त्योत्पत्तिविधिना उत दृष्टेन पुरुषार्थेन ?

"ननु रागः स्त्रीमात्रं प्रयुङ्क्ते न विवाहम्। येन विना यन्न निष्पद्यते तत्तस्य प्रयोजकमिति न्यायः। रागिणां च स्त्रीमात्रेण गृह्यकर्मनिर्वृत्तिः। किमिति विवाहमपेक्षेरन्?"

सत्यम्। यदि वचनान्तरे स्त्रीमात्रे गमनं न निषिद्धं स्यात्। समानेऽपि सर्वत्र वेदाधिगमे शास्त्रतो गम्यागम्यविवेकः। अतश्च धीरप्रकृतीनां न विवाहमन्तरेण स्वार्थसंपत्तिरिति युक्तैव वेदस्य प्रयोजकाशंका।

"यद्येवं सर्वस्य न प्रयोजकानि सन्ति। सर्वेषां तस्मिन्सत्यर्थनिवृत्तौ किं तेन निरूपितेन ? योऽस्ति विवाहप्रयोजकः सोऽस्तु। आश्रमान्तराणि प्रत्यक्षविधाने गार्हस्थ्यस्य कथमुपपद्यन्त इत्येतदधिकृता विवाहप्रयुक्तिचिन्ता तु केनांशेन संगच्छते ?"

उच्यते– यावदुक्तं 'सर्वेषामर्थसिद्धिरिति'। सत्यम्। एकेन प्रयुक्तावन्यस्य प्रसंगादुपकारसिद्धौ न पृथक्प्रयोक्तृत्वकल्पना। यथा व्रीहयः पुरुषार्थेन जीवनेन प्रयुक्ताः कर्मसु विनियुज्यन्ते। न कर्मणि धनार्जनं प्रयुज्यते। यथा वा विद्या सत्यप्यवैद्यस्यानधिकारे न प्रयुज्यते, स्वाध्यायविधिनैव तत्सिद्धेः। एवमिह कामतः प्रवृत्तिसिद्धेर्न कर्मश्रुतयः प्रयोक्तव्याः। नाकृतविवाहमपि कृत्यकर्मविधय उपपत्स्यन्ते।

अतश्च यो ब्रह्मचर्य एव कथंचित्परिपक्वकषायः स न विवक्ष्यते। ततः स द्वितीयत्वाभावान्नाधिकरिष्यते। अतश्च श्रौतेष्वनधिकारात्तादृशस्याश्रमान्तरताऽऽपत्स्येत।

अन्ये मन्यन्ते– नायं धनतुल्यो विवाहः। यथा धनेन विना जीवनमनुपपन्नमिति, स वै जीवेद्धनतः, एवं न स्त्रियमन्तरेण जीवनाभाव इत्यत एव न दृष्टं नियमिनः प्रयोजनं संभवतीति धर्माधिकारार्थोऽपि प्रयुक्तो विवाहः। अवश्यं चैतदेवं विज्ञेयमधिकारोत्पत्त्यर्थे यत्नः कर्तव्य इति। इतरथा हि कृतोत्सर्गस्याशुचित्वादधिकारापनये जननादि शुद्धकालावस्थे च संपादयतो न नित्यकर्मातिक्रमः स्यात्। ततश्च केनार्थेन मृतादिशुद्धौ क्लेशमादध्यात्। "तदपि विहितमेवेति" चेत्। एवं तावन्मात्रस्यातिक्रमो न पुनर्विधिसहस्रस्य।

अथोच्येत—"कस्य पुनर्विधेरयं व्यापारो यदधिकृतत्वसंपत्त्यर्थमधिकृतः स्यामिति पुरुषेण यत्नः कर्तव्य इत्युपदिशति। एतावदग्निहोत्रादिविधयस्ते यस्याम्नायस्तद्विषयां कर्तव्यतां गमयन्ति, न त्वग्नीनामुत्पत्तिं प्रयुञ्जते। अग्नयोऽपि काम्येषु लिप्सया प्रवर्तमानेन तदधिकारसिद्ध्यर्थमाधीयन्ते। तथाहि तेषु जातेष्वाहिताग्नित्वे यावज्जीवश्रुतयः। भार्यावतश्चाधाने-

ऽधिकारः। यथैवाधिकारिणमात्मानं कर्तुमग्नीनाधत्ते, एवं भार्यामप्युपयच्छते। अतो न कस्यचिद्विधेरर्थो विहतो यदि नाग्निहोत्रादिष्वधिकारो जनयितव्यः। न च विवाहविधिरेव स्वार्थकर्तव्यतामवगमयति, नित्याग्निहोत्रादिश्रुतिवत्संस्कारकर्मत्वादधिकारश्रवणाभावाच्च"।

अत्र पूर्वे वदन्ति– ऋणत्रयापाकरणश्रुतिरस्ति "जायमानो ब्राह्मणस्त्रिभिर्ऋणवां जायते" इत्यादि। एषा श्रुतिर्जातमात्रनिबन्धना। न चात्र जन्म द्वितीयमुपनयनाख्यमभिप्रेतम्, प्राक्ततस्तिर्यक्समानधर्मत्वात्। जन्मनि सति यावता कालेनाधिकारावगमो भवति तदेव ऋणश्रुत्या परिगृह्यते। ततश्च विदुषः सतः सत्यधिकारे यः कन्यां याचमानो न प्राप्नुयाद्यावत्सर्वतः पलितस्तस्य वानप्रस्थादावधिकारः। स ह्येतन्निश्चिनोति–यौवन एव कन्या सर्वथा याच्यते, कथयन्त्यन्ये—कृष्णकेशस्यैवाधानं श्रुतम्, भार्यामरणं वर्जयित्वा न सर्वतः पलितेनाधातव्यमिति श्रुत्यर्थं व्याचक्षते।

कर्मसम्बन्धाद्गृहस्थः श्रेष्ठः। अत आश्रमस्यैव श्रैष्ठ्यमुक्तं भवति। **त्रीनेतानिति**। इदमपरं श्रैष्ठ्यकारणं यदन्येषामाश्रमाणां भरणम्। तदुक्तं (३।७८) "ज्ञानेनान्नेन च" इति ।।८९।।

(२) **सर्वज्ञनारायणः**। तदेव प्रकृतमाह **सर्वेषामिति** वेदे श्रुतितः शब्दाभिधानवृत्त्या गृहस्थस्य धर्माणामेव बाहुल्येन विधानदर्शनादितरधर्माणां तु क्वचिदेव विधानाद्बलवत्तात्पर्यं गार्हस्थ्यधर्म एव श्रुतेरित्यर्थः। श्रेष्ठत्वे हेत्वन्तरमाह **स त्रीनिति**। त्रीनाश्रमान् बिभर्ति पुष्णाति तस्माद्गृहस्थाश्रमे परोपकारबाहुल्यात्तस्य च सत्त्वशुद्धित्वाद्गृहस्थ एव श्रेष्ठः ।। ८९ ।।

(३) **कुल्लूकः**। प्रकृतवेदसंन्यासिकस्य गृहे पुत्रैश्वर्ये सुखे वासं वक्ष्यति तदर्थं गृहस्थोत्कर्षमाह **सर्वेषामिति**। सर्वेषामेतेषां ब्रह्मचार्यादीनां मध्ये गृहस्थस्य श्रूयमाणत्वेन प्रायशोऽग्निहोत्रादिविधानाद्गृहस्थो मन्वादिभिः श्रेष्ठ उच्यते। तथा यस्माद्ब्रह्मचारिवानप्रस्थयतीनसौ भिक्षादानेन पोषयति तेनाप्यसौ श्रेष्ठः। यथोक्तं (३।७८) 'यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वह'मिति ।। ८९ ।।

(४) **राघवानन्दः**। किं च **सर्वेषामिति**। विधानमाचरंस्तेभ्यस्त्रीनेतान्बिभर्तीति कृत्वा श्रेष्ठः। वानप्रस्थस्यापि गृहस्थकालीनविद्याद्युपजीवित्वात् ।। ८९ ।।

(५) **नन्दनः**। तथापि वेदसंन्यासिकस्य गृहस्थाश्रमः श्रेष्ठतर इत्याह **सर्वेषामिति**। वेदस्य स्मृत्याः प्रत्यक्षेण विधानतः वैदिकानामाधानादीनां कर्मणां गृहस्थमधिकृत्य विधानस्य प्रत्यक्षश्रुतिमूलत्वादित्यर्थः ।। ८९ ।।

(६) **रामचन्द्रः**। **स** गृहस्थः त्रीनेतानाश्रमान्बिभर्ति ।। ८९ ।।

(८) **गोविन्दराजः**। **सर्वेषामिति**। सर्वेषामेव ब्रह्मचार्यादीनां मध्यात् गृहस्थबाहुल्येन साक्षाद्वेदवाक्यैः कर्मविधानाद्गृहस्थः श्रेष्ठी इति मन्वादिभिरुच्यते। स च यस्मात् ब्रह्मचारितापसयतीन् भिक्षादिनाभिपोषयति। यथोक्तं 'ज्ञानेनान्नेन चान्वहम्'गृहस्थैरेव धार्यन्ते इति तस्मादसौ श्रेष्ठः ।। ८९ ।।

**यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ॥**
**तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥९०॥**

(१) **मेधातिथिः**। एष एवार्थो दृष्टान्तेन दृढीक्रियते—**नद्यो** गङ्गादयः। भिद्यादयो **नदाः**। केनचिदाधारसन्निवेशभेदेन रसभेदेन च नदीनदयोर्निर्देशभेदः। एकत्वविधानं तु रूढ्या। लिङ्गभेदो भार्यादारशब्दवत्। **संस्थितिराश्रयः**। समुद्रो यथा सर्वजलाश्रय एवं गृहस्थः सर्वधर्मानधिकृतवान् ॥ ९० ॥

(२) **सर्वज्ञनारायणः**। हेत्वन्तरमाह **यथेति**। **संस्थितिमवस्थानं** ब्रह्मचर्यपूर्वकत्वादाश्रमान्तराणां तस्य च गृहस्थाश्रयणनियतत्वात् अतो विश्वस्याश्रयणीयत्वादपि श्रेष्ठ इत्यर्थः ॥ ९० ॥

(३) **कुल्लूकः**। यथा **सर्वे नदीनदा** गङ्गाशोणाद्याः समुद्रेऽवस्थितिं लभन्ते एवं गृहस्थादपरे सर्वाश्रमिणस्तदधीनजीवनत्वाद्गृहस्थसमीपेऽ**वस्थितिं लभन्ते** ॥ ९० ॥

(४) **राघवानन्दः**। किं च **यथेति**। **संस्थितिं** गृहस्थसमीपे इति **कुल्लूकः**। **संस्थितिं** भृतिं प्राप्य गृहस्थेष्वेव यान्ति जायन्त इति वार्थः। गृहस्थे सति सम्यक् स्थितिं वा त एव गृहस्थप्रभवा इत्युक्तं। गृहस्थं सर्वधर्मेष्वधिकृत्यार्थमर्थवाद इति **मेधातिथिः** ॥ ९० ॥

(५) **नन्दनः**। **संस्थितिम्** प्रतिष्ठाम् ॥ ९० ॥

(६) **रामचन्द्रः**। **संस्थितिं** एकत्र स्थितिम् ॥ ९० ॥

(७) **मणिरामः**। **संस्थितिं** अवस्थितिं ॥ ९० ॥

(८) **गोविन्दराजः**। **यथेति**। यथा गङ्गाशोणाद्याः सर्वे नदीनदाः समुद्रेऽवस्थानं प्राप्नुवन्ति। एवं सर्व एव ब्रह्मचार्यादय आश्रमिणो अन्नादिलाभार्थं गृहस्थविषयेऽवस्थितिं प्राप्नुवन्ति ॥ ९० ॥

(९) **भारुचिः**। तथा च **गौतमः** :– 'एकाश्रम्यं त्वाचार्याः' । इत्येवमादित्रयोऽपि चैते आश्रमाणां विकल्पादयं पक्षो वेदस्मृतिशास्त्राविरोधेन यथाधिकारं व्याख्यानीयाः। एकान्तग्रहणं त्वाचार्यं शास्त्रविरोधाद्विज्ञेयः ॥९०॥

**चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ॥**
**दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥ ९१ ॥**

(१) **मेधातिथिः**। वक्ष्यमाणोपन्यासार्थः श्लोकः। **दश लक्षणानि** यस्येति बहुव्रीहिः। **लक्षण** स्वरूपम्। **सेवितव्यः** सर्वकालमनुष्ठेयः। उक्तानामप्येतेषां प्रधानत्वाय पुनर्वचनम्। ज्ञानकर्मसमुच्चयपक्षश्चानेन पुनर्वचनेन दृढीकृतः ॥ ९१ ॥

(२) **सर्वज्ञनारायणः**। वेदसंन्यासिकधर्मं प्रक्रम्य प्रसङ्गादन्येष्वप्युपदिशति **चतुर्भिरिति** ॥ ९१ ॥

(३) **कुल्लूकः**। एतैर्ब्रह्मचार्यादिभिराश्रमिभिश्च**चतुर्भिरपि** द्विजातिभिर्वक्ष्यमाणो **दश-विधस्वरूपो धर्मः** प्रयत्नतः सततमनुष्ठेयः ।। ९१ ।।

(४) **राघवानन्दः**। चतुर्णां साधारणधर्मानाह **चतुर्भिरिति** ।। ९१ ।।

(५) **नन्दनः**। **एतै**र्वेदसंन्यासिकैः ।। ९१ ।।

(७) **मणिरामः**। दशविधस्वरूपो धर्मः ।। ९१ ।।

(८) **गोविन्दराजः** । एतैश्चतुर्भिर्ब्रह्मचार्यादिभिः आश्रमिभिर्द्विजैर्वक्ष्यमाण-दशकारणिको धर्मो यत्नेनाभ्यसनीयः ।। ९१ ।।

(९) **भारुचिः**। तत्र तत्र शास्त्रेण ... द्विक्षेपेणोक्तो नावृत्त्यादीनां समाहृत्येहोपदेशः पुनरसम्मोहार्थः अथवा साधारणत्वप्रदर्शनार्थः विशेषणार्थो वा ।।९१।।

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।। ९२ ।।**

(१) **मेधातिथिः**। धृत्यादय आत्मगुणाः। तत्र **धृति**र्नाम धनादिसंक्षये सत्वाश्रयः। यदि क्षीणं ततः किं? शक्यमर्जयितुमिति। एवमिष्टवियोगादौ 'संसारगतिरियमीदृशीति' प्रचलतश्चित्तस्य यथापूर्वमवस्थापनम्। **क्षमा** अपराधमर्षणम्। कस्मिंश्चिदपराद्धरि प्रत्युद्वेजनानारम्भः। **दम** अनौद्धत्यं विद्यामदादित्यागः। **अस्तेयं** प्रसिद्धम्। **शौचमाहा**-रादिशुद्धिः। **इन्द्रियसंयम** अप्रतिषिद्धेष्वपि विषयेष्वप्रसंगः। **धीः** सम्यग्ज्ञानं प्रतिपक्ष-संशयादिनिराकरणम्। **विद्या**ऽऽत्मज्ञानम्। कर्माध्यात्मज्ञानभेदेन धीविद्ययोर्भेदः। एत-त्पौनरुक्त्यतया 'धीविद्येति' पठन्ति। तन्न सम्यक्; भेदस्य दर्शितत्वात्। अन्यत्प्रसिद्धम्। **अक्रोधः** उत्पत्स्यमानस्यानुत्पत्तिः। **क्षमा** कृतेऽप्यपकारेऽपकारानारम्भः ।। ९२ ।।

(२) **सर्वज्ञनारायणः**। **धृतिः** प्रारब्धकर्मणि दुःखे सत्यनुद्वेगः। **क्षमा** क्रोधहेतू-त्पत्तावपि तदनुत्पादः। **दम**स्तपःक्लेशसहता। **अस्तेयं** परपरिगृहीतेष्वस्पृहा। **शौचं** मृदादिभिः। **इन्द्रियाणां निग्रहो** विषयेष्वप्रवर्तनं। **ह्री**रकार्यान्निवर्तकं ज्ञानं। **विद्या**ऽऽत्मो-पासना। **सत्यं** मिथ्याहितात्मकवाक्यानुरक्तिः। **अक्रोधः** दैवादुत्पन्ने क्रोधे तन्निवर्तन-प्रयत्नः। **धर्मलक्षणं** धर्मकारणम् ।। ९२ ।।

(३) **कुल्लूकः**। तमेव स्वरूपतः संख्यादिभिश्च दर्शयति **धृतिरित्यादि**। संतोषो **धृतिः**। परेणापकारे कृते तस्य प्रत्यपकारानाचरणम् **क्षमा**। विकारहेतुविषयसन्निधाने-ऽप्यविक्रियत्वं मनसो **दमः**। 'मनसो दमनं **दम**' इति सनन्दनवचनात्। शीतातपादिद्वन्द्व-सहिष्णुता दम इति **गोविन्दराजः**। अन्यायेन परधनादिग्रहणं स्तेयं, तद्भिन्न**मस्तेयम्**। यथा शास्त्रं मृज्जलाभ्यां देहशोधनं **शौचम्**। विषयेभ्यश्चक्षुरादिवारण**मिन्द्रियनिग्रहः**। शास्त्रादि-तत्त्वज्ञानं **धीः**। आत्मज्ञानं **विद्या**। यथार्थाभिधानं **सत्यम्**। क्रोधहेतौ सत्यपि **क्रोधा**-नुत्पत्तिरक्रोधः। एतद्दशविधं धर्मस्वरूपम् ।। ९२ ।।

(४) **राघवानन्दः**। तानेवाह **धृतिरिति**। **धृतिः** स्वस्वधर्मास्खलनं। **क्षमा** द्वन्द्वसहिष्णुता। **दमो** मनसो निग्रहः। **शौचं** बाह्यमाभ्यन्तरं। **धीः** शास्त्रतत्त्वज्ञानं। **विद्या**त्मज्ञानं सगुणोपासना वा ।। ९२ ।।

(५) **नन्दनः**। दशलक्षणं धर्ममाह **धृतिरिति**। **धृतिः** स्वधर्मापरित्यागः। **क्षमा**ऽवमानसहत्वम्। **दमो**ऽनुद्धतिः। **ह्रीर्नि**षिद्धकरणे लज्जा, **धीरि**ति पाठेऽध्यवसायः। **विद्या** बाहुश्रुत्यम्। **अक्रोधो** वाञ्छितार्थप्रतिघातिषु चित्तस्याविकारः ।। ९२ ।।

(६) **रामचन्द्रः**। **धृतिः** कार्यानुद्वेगः। **क्षमा** शान्तिः। **दमः** तपः क्लेशसहिष्णुता। **अस्तेयं** परद्रव्यनिःस्पृहता। **शौचं** मृत्तिकादिभिः। **इन्द्रियनिग्रहः**। **ह्रीः** अकार्यान्निवर्तनं। **विद्या** आत्मोपासना। **सत्यं** यथार्थभाषणं। **अक्रोधः**। एवं धर्मलक्षणदशकं संपूर्णम् ।। ९२ ।।

(७) **मणिरामः**। दशविधधर्मानाह **धृतिरित्यादि**। **धृतिः** संतोषः। **क्षमा** अपकारिण्यपि प्रत्यकाराऽकरणं। **दमः** विषयसन्निधानेऽपि विकाराभावः। **अस्तेयं** अन्यायेन धनाद्यग्रहणं, **धीः** शास्त्रादितत्त्वज्ञानं **विद्या** आत्मज्ञानं ।। ९२–९३ ।।

(८) **गोविन्दराजः**। **धृतिरिति**। सन्तोषोऽपराधसहनं शीतातपादिद्वंद्वसहिष्णुता परद्रव्याग्रहणं मृद्वार्यादिशुद्धिर्जितेन्द्रियतानुपहता बुद्धिरात्मज्ञानं यथोपलब्धाभिधानं क्रोधानुत्पत्तिरित्येतत् दशपरिमाणं धर्मलक्षणं सर्वमेतदिह शास्त्रविक्षिप्तमुक्तमपि प्रायश एतावन्मात्रत्वाद्धर्मस्येह पुनरुच्यते। संक्षेपतो संमोहेनावबोधार्थम् ।। ९२ ।।

(९) **भारुचिः**। धृतिर्नाम यथाशास्त्रमवस्थानम् आत्मगुणाद्यतो भवति सा धृतिः। क्षमा चित्तसंक्षोभहेतुष्वप्रतिक्रियापराधमर्षणेदमस्तु द्वन्द्वाभि....। अन्ये तु शास्त्रविहिताभ्यासं दमं मन्यन्ते च। परद्रव्येष्वात्मसंयमोऽस्तेयम्। आहारादिशुद्धिश्शौचम्। इन्द्रियसंयमो नाम इन्द्रियविषयेष्वविरुद्धेष्वप्रसंगं यथाविषयं विज्ञानं शास्त्रात्संशयादिप्रतिपक्षरहितं विधिः। विद्या वेदाभ्यासः। सत्यं प्रसिद्धम्। अक्रोधः सत्स्वपि संक्षोभहेतुषु चित्तस्याविकारः। पूर्वत्रोत्पन्नस्य क्रोधस्य कार्यानारम्भः क्षमेत्युक्तः। इह त्वनुत्पत्तिरेव क्रोधस्येति विशेषः। सर्वं चैतच्छास्त्रविहितमपि सत्सुखावबोधनार्थं पुनः संक्षिप्य नोक्तम्। परिचिन्त्यमानश्च सर्वोऽयं यमनियम....सिता नेति तत्फलविवक्षयेदमाह ।। ९२ ।।

**दश लक्षणानि धर्मस्य ये विप्राः समधीयते ।।**
**अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम् ।।९३ ।।**

(१) **मेधातिथिः**। पूर्वस्यविधेः फलकथनम्। अध्ययनात् फलश्रुतिरनुष्ठानश्रुत्यर्था ।।९३।।

(२) **सर्वज्ञनारायणः**। **समधीयते** जानन्ति **अनुवर्तन्ते** अनुतिष्ठन्ति। अज्ञात्वाऽनुष्ठानस्याफलत्वात् ज्ञानेऽपि फलोक्तिः ।। ९३ ।।

(३) **कुल्लूकः**। **ये विप्रा** एतानि दशविधधर्मस्वरूपाणि पठन्ति पठित्वा चात्मज्ञानसाचिव्येनानुतिष्ठन्ते ते ब्रह्मज्ञानसमुत्कर्षात्परमां गतिं मोक्षलक्षणां प्राप्नुवन्ति ।। ९३ ।।

(४) **राघवानन्दः**। वेदाभ्यासार्थमेव संन्यासी वेदसंन्यासी तस्य च कृत्यमाह **दशेति** द्वाभ्यां। एतेषामध्ययनेनापि कृतकृत्यतामाह **अधीयत** इति। **अनुवर्तन्ते** शब्दतोऽर्थतश्चाभ्यस्यन्ति परमामनुपमाम् ।। ९३ ।।

(५) **नन्दनः**। वेदसंन्यासिनो गृहस्थस्य कर्तव्यमाह **दशेति** ।। ९३ ।।

(८) **गोविन्दराजः**। **दशलक्षणानीति**। ये ब्राह्मणा एतानि दशलक्षणानि पठन्ति पठित्वा चानुतिष्ठन्ति ते उत्कृष्टं स्थानं ब्रह्मलोकं वा ज्ञाने सति मोक्षं प्राप्नुवन्ति ।। ९३ ।।

**दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ।।**
**वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ।। ९४ ।।**

(१) **मेधातिथिः**। **संन्यसेदनृणः**। यदा ऋणत्रयमपाकीर्णं तदा संन्यास इत्येवमर्थमेतत्। समानकाले प्रव्रज्यायां नाधिक्रियते। एवं संन्यासेऽपि।

**वेदान्तान्विधिवत्**। अविदितवेदान्तार्थस्य नास्ति संन्यासः। यद्यपि—स्वाध्यायविध्यनुष्ठानाक्षिप्तं कर्म विधिशास्त्रवद्वेदान्तज्ञानमपि, स्वाध्यायशब्दवाच्यत्वाविशेषात्—तथापि वेदान्तानां पुनरुपन्यासो विशेषार्थः। तत्परेण भवितव्यम्। अथ 'संन्यसेदिति' कः शास्त्रार्थः। कोऽयं संन्यासो नाम ? ममेदमिति परिग्रहत्यागः। "ननु वेदसंन्यासिका इत्युक्तम्। तत्रेदं प्रतीयते 'वेदस्य वेदार्थस्य वा संन्यासः', न च वैदिककर्मसिद्ध्यर्था ये प्रतिग्रहादयस्तेषां संन्यासः।"

"इदमानन्त्यमिच्छतामिति' (श्लो. ८४) अध्ययनस्य ज्ञानप्राधान्येऽपि विहितत्वात्। अग्निहोत्रादीनां तु द्रव्यसाध्यत्वादसति ममकारे त्याग एव। स चायं धर्मापादको मृतभार्यस्य परनिष्ठस्य वा कृतसंप्रतिविधानस्य। वाजसनेयके हि पठ्यते "यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह" इत्यादि। अग्निसमारोपणं च तदा विहितम्। जीर्णस्य च "जरया ह वा एतस्मान्मुच्यत" इत्यामनन्ति। यानि चाद्रव्यसाध्यानि संध्योपासनादीनि नित्याग्निहोत्रादीनि तेषामनिषेधात्तत्र आ अन्त्यादुच्छ्वासादधिकारः ।। ९४ ।।

(२) **सर्वज्ञनारायणः**। वेदसंन्यासप्रकारमाह **दशलक्षणकमिति**। **वेदान्तानु**पनिषदः। **विधिवदा**चार्योपसदनादिना अनृणोपाकृतर्णत्रयो भूत्वा। **संन्यसे**द्वेदाभ्यासतदनुगुणाधिकारापादकसंध्योपासनादिकर्मातिरिक्तानि कर्माणि संत्यजेत् ।। ९४ ।।

(३) **कुल्लूकः**। उक्तं **दशलक्षणकं** धर्मं संयतमनाः सन्ननुतिष्ठन्नुपनिषदाद्यर्थं गृहस्थावस्थायां यथोक्ताध्ययनधर्मान्गुरुमुखादवगम्य परिशोधितदेवाद्यृणत्रयः **संन्यासमनु**तिष्ठेत् ।। ९४ ।।

(४) **राघवानन्दः**। किं च **दशेति**। अपठितवेदान्तस्य संन्यासेनाधिकार इत्याह **वेदान्तानिति**। **विधिवदिति** गुरुमुखात् षड्विधलिंगपुरःसरं श्रुत्वा वेदान्तानां तात्पर्यनिर्णयं च। षड्विधलिङ्गं तु 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय' इति ।। ९४ ।।

(५) **नन्दनः। संन्यासः** काम्यकर्मत्यागः। तथा चोक्तं **भगवद्गीतायाम्** (१८।२) 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। नियतस्य तु संन्यासः कर्मणो नोपपद्यते। यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्। एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तम'मिति ।। ९४ ।।

(७) **मणिरामः। वेदान्तं** उपनिषदर्थं **अनृणः** शोधितदेवादिऋणत्रयः।। ९४ ।।

(८) **गोविन्दराजः। दशलाक्षणिकमिति।** एवं दशलाक्षणिकमुक्तं धर्मं संयतमना आचरन्नुपनिषदः सम्यक् ज्ञात्वा 'त्रिभिर्ऋणैर्ऋणवां'नित्याद्युपाकृतवर्णत्रयो द्विज उक्तं वेदसंन्यासित्वमनुतिष्ठेत् ।। ९४ ।।

(९) **भारुचिः।** सन्न्यासक्रमार्थमधुनेदमुच्यते वेदश्रुत्या गार्हस्थ्यस्याधानात् प्रभृत्याश्मशानकरणात् सर्वम(भि)धीयते। न स्मृत्या अतः प्रत्यक्षविधानात् गार्हस्थ्यस्य तदनुष्ठानपुरुषोऽपि श्रेष्ठ उच्यते। यतश्च स त्रीनेतान् बिभर्त्यन्नादिभिः। अतश्च तथाचोक्तं 'यस्मात् त्रयोऽप्याश्रमिणः' इत्येवमादि। अस्य च गृहस्थाश्रमस्य वेदश्रुतिविधानतः श्रैष्ठ्यवचनात् तदविरोधेनाश्रमान्तरप्रतिपत्तिरर्थाद् गम्यते। एवं च संन्यासाश्रमाणां न समो विकल्पः, किं तर्हि ? विषमोऽस्मिन् बाधापक्षे स्मार्तत्वादाश्रमाणामस्य स्तुतिः।। ९४ ।।

**संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन् ।।**
**नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ।। ९५ ।।**

(१) **मेधातिथिः। वेदमभ्यस्येति** वेदस्यात्यागमाह। दर्शितमेतत्। **अभ्यस्यन्निति** शतृप्रत्ययान्तपाठो वा। **पुत्रैश्वर्ये सुखं वसेत्।** पुत्रग्रहणमुत्पन्नस्य पुत्रस्य। अन्योऽपि यस्तत्स्थानः पौत्रादिस्तत्रापि युक्तो गृहान्तरन्यास इत्याहुः।। ९५ ।।

(२) **सर्वज्ञनारायणः। सर्वकर्माणि** नित्यनैमित्तिककाम्यानि वेदाभ्यासतदनुगुणदेहशुद्धिहेत्वाचमनस्नानसंध्याकर्मादिभ्योऽन्यानि **संन्यस्य** त्यक्त्वा संन्यासात् कर्मानुष्ठानादिना भूतान् हिंसादिदोषान**पानुदन्** परिहरन् **नियतो** यमनियमवान्। **अभ्यस्यन्** 'वाच्येके जुह्वति प्राण'मित्युक्तप्रकारेण स्वाध्यायेनैव पञ्चमहायज्ञाः संपाद्याः पुत्रः सततमधीयानः। **पुत्रैश्वर्ये** पुत्रगार्हस्थ्ये तेन पञ्चमहायज्ञानुष्ठानं पुत्रेणैव कार्यं, स्वयं तु स्यैवैश्वर्यं यद्गार्हस्थ्ये न त्वात्मन इत्यभिधानेन वित्तेषु ममता कार्या न स्वयं तथाचानीहो भूत्वा निवसेदिति गम्यते।। ९५ ।।

(३) **कुल्लूकः। सर्वाणि** गृहस्थानुष्ठेयाग्निहोत्रादि**कर्माणि** परित्यज्याज्ञातजन्तुवधादिकर्मजनितपापानि च प्राणायामादिना नाशयन्नियतेन्द्रिय उपनिषदो ग्रन्थतोऽर्थतश्चाभ्यस्य **पुत्रैश्वर्यं** इति पुत्रगृहे पुत्रोपकल्पितभोजनाच्छादनत्वेन वृत्तिचिन्तारहितः **सुखं वसेत्।** अयमेवासाधारणो धर्मः कुटीचकस्योक्तः। इदमेव वक्तुं 'वेदसंन्यासिनां त्वि'ति पूर्वमुक्तम्।। ९५ ।।

(४) **राघवानन्दः**। **पुत्रैश्वर्ये** पुत्रदत्तभिक्षादौ ।। ९५ ।।

(५) **नन्दनः**। तत्तत्काम्यकर्म फलभोगानुरूपदेहप्राप्तयः। कर्मदोषास्तानपानुदं-स्तेषामपनोदनहेतोः **सर्वाणि** काम्य**कर्माणि संन्यस्य नियतो** नियतकर्मकारी वेदमभ्यस्यञ्ज-पन् ।। ९५ ।।

(६) **रामचन्द्रः**। **कर्मदोषानपानुदन्** दूरीकुर्वन् नियतः सन्वेद**मभ्यस्य** ओंकारं वा अभ्यस्य **पुत्रैश्वर्यं** पञ्चयज्ञविधानं पुत्रेण कार्यं एवंविधः सुखं वसेत् ।। ९५ ।।

(७) **मणिरामः**। असाधारणं कुटीचकधर्ममाह **संन्यस्येति**। **सर्वकर्माणि** गृहस्थानुष्ठेयाग्निहोत्रादिकर्माणि। **कर्मदोषान्** अज्ञातजंतुवधजनितदोषान्। **अपानुदन्** प्राणायामादिना नाशयन्। **नियतः** नियतेंद्रियः। **वेदमभ्यस्य** उपनिषदः ग्रंथतोऽ-र्थत अभ्यस्य। **पुत्रैश्वर्यं** पुत्रगृहेषु चोपकल्पितभोजनाच्छादनत्वेन **वृत्तिः चितारहितः**।

(८) **गोविन्दराजः**। **संन्यस्येति**। सर्वाण्यग्निहोत्रादिकर्माणि परित्यज्य 'ज्ञानेनैवापरे विप्रा' इत्येवमादिप्रकारेण ज्ञानबलात्तान्यनुतिष्ठन्नबुद्धिपूर्वां संचितपापान्युत्तरश्लोके वक्ष्यमाणत्वात् संन्यासेनैव संहरन् गृहीतनिश्चयो वेदं ग्रन्थतोऽर्थतश्चाभ्यस्यन् पुत्रगतसमृद्ध्युपेतेन पुत्रोपकृतग्रासाच्छादनवृत्तित्वात् सुखं वसेत् ।। ९५ ।।

**एवं संन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः ।।**
**संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ।।९६।।**

(१) **मेधातिथिः**। स्वकार्यमात्मोपासनं **परमं** प्रधानमस्येति स्वकार्यपरमं **अस्पृहः** मनस्यपि स्पृहा न क्वचित्कर्तव्या ।। ९६ ।।

(२) **सर्वज्ञनारायणः**। स्वकार्यपरमः स्वकर्तव्यनित्यकर्मविशेषस्वाध्यायमात्रपरः। अपहत्येनः संसारे हेतुमधर्मम्। तदानेन गृहस्थ एव धृत्यादिदशलक्षणधर्मानुष्ठानपरः स्वाध्यायनित्योऽनीहमानः पुत्रगृहे भुञ्जानो नित्यनैमित्तिककाम्यकर्मपरित्यागादविघ्नि-तात्मदृष्टिर्वेदान्तार्थपरिभावनया ब्रह्म भवतीति दर्शितम्। तत्र स्नानाचमनसंध्योपासनानि स्वाध्यायाधिकारार्थमेवानुष्ठेयं 'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्वि'ति वचनेन हि संध्यानुष्ठानमपि शौचहेतुतया स्मर्यते यमानां नियमानां च मध्ये यावत्स्वाध्यायाविरोधे-स्तावदनुष्ठेयम् स्वाध्याये च क्रियमाणे निरन्तरं तदर्थोऽनुसंधेयः अर्थज्ञानशून्यस्य तस्याल्प-फलत्वादिति ।। ९६ ।।

(३) **कुल्लूकः**। एवमुक्तप्रकारेण वर्तमानोऽग्निहोत्रादिगृहस्थकर्माणि परित्य-ज्यात्मसाक्षात्कारस्वरूपस्वकार्यप्रधानः स्वर्गादावपि बन्धहेतुतया निःस्पृहः प्रव्रज्यया पापानि विनाश्य ब्रह्मसाक्षात्कारेण परमां गतिं मोक्षलक्षणां प्राप्नोति ।। ९६ ।।

(४) **राघवानन्दः**। **स्वकार्यपरमः** आत्मसाक्षात्कारप्रधान इति केचित्। तत्र 'पुत्रै-श्वर्यं' इति वचनात्। अविरक्ततया 'संन्यासाद्ब्रह्मणः स्थान'मित्युक्तेश्च तदुपायनारायण-मन्त्रोपासनया सह स्वधर्मानुष्ठानपरो भवेदित्यर्थः। संन्यासेनापहत्य एनः पापं। मनो-

वाक्कायकर्माणि मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहेति मन्त्रलिङ्गादिति। **परमां गतिं** ब्रह्मलोकावाप्तिं प्राप्नोति। परमपदप्रयोगात्'पुत्रैषणायाश्चे'ति श्रुतेश्च। तत्रा-प्याश्रमे विरक्तः सन्परमहंससंन्यासं कृत्वा वा मोक्षावाप्तिरिति॥ ९६॥

(५) **नन्दनः।** वेदसंन्यासिकस्य कर्मयोगानुष्ठाने फलमाह **एवमिति। स्वकार्यपरमः** स्वस्य कार्यनियतः कर्मेरितस्तत्फलेष्वस्पृहः॥ ९६॥

(७) **मणिरामः।** स्वकार्यपरमः आत्मसाक्षात्कारस्वरूपस्वकार्यप्रधानः **अस्पृहः** स्वर्गादावपि बंधहेतुतया निःस्पृहः॥ ९५-९६॥

(८) **गोविन्दराजः। एवमिति।** एवमुक्तनीत्या कर्माणि अग्निहोत्रादीनि परित्य-ज्यात्मज्ञानाख्यस्वकार्यप्रधानो विगताभिलाषकः संन्यासेनासंचेतितोत्पन्नं पापं निर्हृत्य ब्रह्म-लोकं ज्ञाने वा सति मोक्षं प्राप्नोति॥ ९६॥

(९) **भारुचिः।** फलार्थवादोऽयम्, फलविधिर्वा आगमः सत्यपि द्विजातित्वे। तथा च वाजसनेयिकं रहस्यब्राह्मणमिदमर्थं भवति ब्राह्मणा(णः) प्रव्रजत्येवमादि। उक्तः॥ ९६॥

**एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः।**
**पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत॥ ९७॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां षष्ठोऽध्यायः॥६॥**

(१) **मेधातिथिः। चतुर्विधो** धर्मश्चातुराश्रम्यम्। ब्राह्मणस्य सर्वमेतद्विहितम्।

"ननु च 'एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विज' इति द्विजग्रहणमुपक्रमे श्रुतम्। तस्य चानुपजातविरोधित्वात् त्रैवर्णिकार्थिता निश्चिता। अतश्चेदं ब्राह्मणग्रहणं त्रैवर्णिक-प्रदर्शनार्थमेव युक्तम्। यद्येकवाक्यतोपक्रमोपसंहारयोर्न स्यात् तदा नैवं स्यात्। एक-वाक्यत्वे तु बलवदुपक्रमार्थः शक्यः प्रतिपत्तुम्"। कृत्स्नवाक्यपर्यालोचनया योऽर्थः स निश्चीयते। अतो द्विजग्रहणं ब्राह्मणपरतयोपसंहर्तव्यम्। अस्ति ब्राह्मणस्य द्विजातित्वम्, न तु सर्वेषु द्विजातिषु ब्राह्मण्यम्। अत्रापि द्विजशब्दार्थे संभवति नान्वयिनि लक्षणा न्याय्या। तथा च **महाभारते** शूद्रस्यापि त्रय आश्रमाः श्रूयन्ते 'शुश्रूषा कृतकृत्य-स्येति' उपक्रम्य 'आश्रमा विहिताः सर्वे वर्जयित्वा निरामिषम्', परिव्राज्यमित्यर्थः।" नैवं तस्यायमर्थः 'सर्व आश्रमास्तु न कर्तव्याः। किं तर्हि? शुश्रूषयाऽपत्योत्पादनेन च सर्वाश्रमफलं लभते'। द्विजातीन् शुश्रूषमाणो गार्हस्थ्येन सर्वाश्रमफलं लभते, परिव्राजक-फलं मोक्षं वर्जयित्वा। अतो ब्राह्मणधर्म एव चातुराश्रम्यमिति सिद्धम्॥ ९७॥

(२) **सर्वज्ञनारायणः।** उपसंहरति **एष व** इति। **चतुर्विधः** आश्रमभेदात् ब्राह्मण-स्यैव चतुर्विधोऽन्येषां तु द्विजातीनां त्रिविध एव; संन्यासे तेषामनधिकारात्। शूद्रस्य तु गार्हस्थ्य एवाधिकारादेकविध एव। ब्राह्मणस्येत्यत्र केचित् **बौधायनेन** परिव्राजकधर्मं प्रक्रम्य 'स्त्रीणां चैक' इति वचनात्पुल्लिङ्गमविवक्षितमित्याहुः। एकग्रहणाद्बौधायनस्यापि स्त्रीणां

पारिव्राज्यं नापेक्षितमिति विवक्षितमेव पुल्लिङ्गमित्यन्ये। चतुर्विधोऽपि पुण्यः स्वर्गहेतुपुण्यजनकः अक्षयफलो मोक्षहेतुः ।। ९७ ।।

श्रीनारायणसर्वज्ञकृता। वृत्तिर्मनुस्मृतेः। कुनिबन्धकृतव्याख्यामियं दूरे निरस्यते। **इति सर्वज्ञश्रीनारायणकृतौ मनुस्मृत्यर्थविवृतौ वानप्रस्थयतिधर्मो नाम षष्ठोऽध्यायः ।। ६ ।।**

(३) **कुल्लूकः**। ऋषीन्संबोध्य उच्यते। एष युष्माकं ब्राह्मणस्य संबन्धी क्रियाकलापो धर्मस्तस्यैव ब्रह्मचारिगृहस्थवानप्रस्थादिभेदेन चतुर्विधः परत्राक्षयफल उक्तः। इदानीं राजसंबन्धिनं धर्मं शृणुत। अत्र च श्लोके ब्राह्मणस्य चातुराश्रम्योपदेशाद्ब्राह्मणः प्रव्रजेदिति पूर्वमभिधानाद्ब्राह्मणस्यैव प्रव्रज्याधिकारः ।। ९७ ।।

**इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां षष्ठोऽध्यायः ।। ६ ।।**

(४) **राघवानन्दः**। **वो** युष्मभ्यं **चतुर्विधः** ब्रह्मचर्यादिभेदभिन्नः **पुण्यः** पुण्यप्रदः **अक्षयफलः** अक्षयं द्विपरार्धकालपर्यन्तं स्थायि फलं यस्य सः ।। ९७ ।।

इति श्रीराघवानन्दविरचितायां **मन्वर्थचन्द्रिकायां** षष्ठोऽध्यायः ।। ६ ।।

(५) **नन्दनः। एष इति**। स्पष्टः ।। ९७ ।।

इति नन्दनाचार्यविरचिते **मानवव्याख्याने** षष्ठोऽध्यायः ।। ६ ।।

(६) **रामचन्द्रः। एष इति** ।। ९७ ।।

**इति श्रीमानवे** धर्मशास्त्रे रामचन्द्रविरचितायां टीकायां षष्ठोऽध्यायः ।। ६ ।।

इति श्रीमिश्रगंगारात्मज-दीक्षित-मणिरामकृतायां **सुखबोधिन्यां** षष्ठोऽध्यायः समाप्तः ।। ६ ।।

(८) **गोविन्दराजः। एष इति**। एष ब्रह्मचारिगृहस्थवानप्रस्थप्रव्रजितानुष्ठेयरूपश्चतुःप्रकारो ब्राह्मणसंबन्धी पुण्यहेतुत्वात्पुण्यो ब्रह्मलोकापवर्गफलत्वात् परलोकेऽक्षयफलो धर्मो युष्माकमुक्तः। एवं चास्माद्ब्राह्मणग्रहणात् 'ब्राह्मणः प्रव्रजेद्गृहादि'ति चास्माद्ब्राह्मणाः प्रव्रजन्तीति श्रुतेर्ब्राह्मणस्यैव प्रव्रज्याधिकारो न द्विजातिमात्रस्येत्यवसीयते। इदानीं राजसंबंधिनं धर्मं शृणुत ।। ९७ ।।

इति श्रीभट्टमाधवात्मजगोविंदराजविरचितायां मनुटीकायां यतिधर्मे षष्ठोऽध्यायः ।। ६ ।।

(९) **भारुचिः**। पुनरनयोः राजाचार्ययोः शासनातिगो भविष्यति तं प्रत्युपदेशः प्रायश्चित्तस्य युज्यते, यतोऽर्थक्रमादेवैतस्मात् प्रायश्चित्तानि प्रोत्सार्य राजधर्मा एव तावच्छिष्यन्त इति" ।। ९७ ।।

**इति ऋजुविमलस्य कृतौ मनुशास्त्रविवरणे**

**षष्ठोऽध्यायः ।। ६ ।।**